सर्वशत्रुविनाशाय  सर्वार्थस्य च सिद्धये ।
तस्यैव मूर्तयः पञ्च भानुमत्किरणोज्ज्वलाः ॥ 23

अग्नीशासुरवायव्यकोणेषु  हृदयन्तिकाः ।
सर्वतस्तु ज्वलद्रूपा वरचर्मासिपाणयः ॥ 24

अव्याहतबलैश्वर्यशक्तिसामार्थ्यविग्रहाः ।
क्षेमंकरीं शक्तियुक्तःचोराणां च विभञ्जनः ॥ 25

प्राचीं दिशं रक्षतु मे बाणबाणासनैर्युतः ।
श्रीकरीशक्तिसहितो मारीमदविभञ्जनः ॥ 26

शरचापधरः श्रीमान् दिशं मे पातु दक्षिणाम् ।
महावश्यकरी युक्तो शत्रूणां मदभञ्जनः ॥ 27

महेषुचापधृक् पातु मम प्राचेतसीं दिशम् ।
यशः करी यशस्करो दैत्यानां मदभञ्जनः ॥ 28

कोदण्डेषुधरस्सौम्यां दिशं मे परिरक्षतु ।
प्रज्ञाकरीयुतश्चापःबाणधृक् दुष्टशासनः । 29

परिरक्षतु मां समयक् विदिशं चाग्निदेवताम् ।
विद्याकरी समायुक्तः सुमहान् दुष्टशासनः ॥ 30

पातु मे नैर्ऋतीं चापबाणो विदिशमीश्वरः ।
धनाकर्षणसमायुक्तो महादुरितनाशनः ॥ 31

CC-0 Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

इष्वासनेषु दृक् पातु विदिशो मम वायवीम् ।
आयुष्कार्यायुतःश्रीमान् महाभयविनाशनः ।। 32

चापेषुधारीरौर्वीं मे विदिशं परिरक्षतु ।
विजयश्रीयुतस्साक्षात्साहस्त्रारधरो विभुः ।। 33

दिशमूर्ध्वामवतु मे महाभयविभञ्जनः ।
शंखभृत्सुमहाशक्तिस्सम्भूतो मे धरां दिशम् ।। 34

परिरक्षतु मे दुःखध्वान्तसंभेदभास्करः ।
महाशोभाश्रयायुक्तः सर्वदिक्चक्रमण्डलः ।। 35

महायोगीश्वरः पातु सर्वतो मम पद्मधृक् ।
एतश्च कार्तवीर्यस्य शुक्लमाल्यांशुकावृताः ।। 36

प्रधानदेवतारूपाः पृथग्वररथस्थिताः ।
शक्तयः पद्महस्ताश्च नीलेन्दीवरसन्निभाः ।। 37

शुक्लमाल्यसुवसना ललितास्तिलकोज्वलाः ।
तत्पार्श्वदेवताः स्वस्ववाहनायुधभूषणाः ।। 38

स्वस्वदिक्षु स्थिताः पान्तु मामिन्द्राद्या महाबलाः ।
एतास्तस्य समाख्याताः सर्वावरणदेवताः ।। 39

सर्वतो मां सदा पातु सर्वशक्तिसमन्विताः ।
हृदये चोदरे नाभौ जठरे गुह्यमण्डले ।। 40

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ऊरुयुग्जानुपादेषु मूर्ध्नि भ्रूयुगलेऽपि च ।
कर्णाक्षिनासिकाजिह्वाकण्ठबाहुयुगेषु च ।। 41

दशबीजात्मिकामन्त्राः यस्य संवृद्दिदायकाः ।
तेजोरूपधराः पान्तु वाञ्चापूरसुरद्रुमाः ।। 42

दश चान्ये महावर्णाः मन्त्ररूपा महोज्जवलाः ।
व्यापकत्वेन पान्त्वस्मानापादतलमस्तकम् ।। 43

कार्तवीर्यः शिरः पातु ललाटं हैहयेश्वरः ।
सुमुखो मे मुखं पातु कर्णौ व्याप्तजगत्त्रयः ।। 44

सुकुमारो हनू पातु तालौ भ्रुयुगलेपि च ।
नयने पुण्डरीकाक्षो नासिकां मे गुणाकरः ।। 45

दन्तोष्टौ तु सदा पातु ब्रह्मगेयः सनातनः ।
सर्वशास्त्रकलाधारो जिह्वां चुबुकमव्ययः ।। 46

दत्तात्रेयप्रियः कर्णौ स्कन्धौ राजकुलेश्वरः ।
भुजौ दशास्यदर्पघ्नो हृदयं मे महाबलः ।। 47

कुक्षौ रक्षतु मे विद्वान् वक्षः परपुरञ्जयः ।
करौ सर्वार्थदः पातु काराग्रे त्रिजगत्पतिः ।। 48

रेवाम्बुलीलासन्तृप्तो ज्वरं मेऽभिरक्षतु ।
महावीरस्तु मे नाभिं पार्श्वौ मे सर्वदुष्टहा ।। 49

CC-0T Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सहस्रभुजधृक् पृष्टं सप्तद्वीपाधिपः कटिम् ।
गुह्यं जितेन्द्रियः पातु सन्धिं नो योगवल्लभः ।। 50

ऊरू माहिष्मतीनाथो जानुनी वल्लभो भुवः ।
जङ्घे वीराधिपः पातु पादौ पातु मनोजवः ।। 51

पातु सर्वायुधधरः सर्वाङ्गं सर्वसन्धिषु ।
सर्वदुष्टान्तकः पातु धात्वष्टककलेबरम् ।। 52

प्रणादि दशजीवेशान् सर्वशिष्टेष्टदोऽवतु ।
वशीकृतेन्द्रियग्रामो पातु सर्वेन्द्रियाणि मे ।। 53

रोमकूर्चानि राजेन्द्रस्त्वचं मेऽसाध्यविग्रहः ।
अस्थिमांसादिकं पातु सर्वक्षुद्रनिवारकः ।। 54

अनुक्तमपि च यत्स्थानं शरीरान्तर्बहिश्च यत् ।
तत्सर्वं पातु मे सर्वलोकनाथेश्वरेश्वरः ।। 55

वज्रासारतरं चेदं शरीरं कवचावृतम् ।
बाधाशतविनिर्मुक्तमस्तु मे भयवर्जितम् ।। 56

यद्विदं कवचं दिव्यमभेद्यं हैहयेशितुः ।
विचरामि दिवारत्रौ निर्भयेनान्तरात्मना ।। 57

राजमार्गे भये दुर्गे मार्गे चोरादिसङ्कुले।
विषमे विपिने घोरे दावाग्नौ गिरिकन्धरे ।। 58

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सङ्ग्रामे शत्रुसंबाधे सिंहव्याघ्रनिपातने ।
गह्वरे सर्पसंकीर्णे देशे चोरगणावृते ।। 59

सर्वस्वहरणे प्राप्ते प्राप्ते प्राणस्य संकटे ।
नाना रोगज्वरावेशे पिशाचप्रेतपातने ।। 60

मारीदुःस्वप्नपीडासु क्लिष्टविश्वासघातके ।
शरीरे च महादुःखे मानसे च महाज्वरे ।। 61

आधिव्याधिभये विघ्ने मान्त्रोपद्रवकेऽपि च ।
न भवेत्तु भयं किञ्चित्कवचेनावृतस्य मे ।। 62

आगन्तुकामानखिलानस्मद्वस्तु विलुम्पकान् ।
निवारयतु दोर्दण्डसहस्रेण महारथः ।। 63

स्वकरोददृतसाहस्रपाशबन्धान् सुदुर्जयान् ।
संरुद्धगतिसामर्थ्यान् करोतु कृतवीर्यजः ।। 64

सृणीसहस्रनिर्भिन्नान्सहस्रशरखण्डितान् ।
राजचूडामणिः क्षिप्रं करोत्वस्मद्विरोधकान् ।। 65

खड्गसाहस्रदलितान् सहस्रमुसलार्दितान् ।
चोरादिदुष्टसर्वौघान् करोतु कमलेक्षणः ।। 66

स्वशङ्खनादसन्त्रस्तान् सहस्रारविदारितान् ।
करोतु दुष्टसत्वौघान् साहस्रारस्सहस्रधृक् ।। 67


CC-0 Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कृतवीर्य सुतो राजा सहस्रभुजमण्डलः ।
अवतारो हरेस्साक्षात्पालयेत्सकलम् मम ॥ 68

कार्तवीर्यार्जुनो नाम राजाबाहुसहस्रवन् ।
तस्य संस्मरणादेव हृतं नष्टं च लभ्यते ॥ 69

धनुः पञ्चशतं वामे दाक्षिणे तावतः शरान् ।
बिभ्राणः कार्तवीर्योऽसौ पालयेत्सकलं मम ॥ 70

यद् भवेल्लोकरक्षार्थं अंशाच्चक्रं हरेर्विभोः ।
तन्नमामि महावीर्यमर्जुनं कृतवीर्यजम् ॥ 71

कार्तवीर्य महावीर्य सर्वशत्रुविनाशन ।
सर्वत्र सर्वदा तिष्ठन् चोरान्नाशय पाहिमाम् ॥ 72

उत्तिष्ट दुष्टदमन सप्तद्वीपैकपालक ।
त्वामेव शरणं प्राप्तं सर्वार्ताद्रक्ष पाहिमाम् ॥ 73

दुष्टघ्न किं त्वं स्वपिषि किं तिष्टसि चिरापदि ।
पाहि नः सर्वदा सर्वं भयेभ्यः स्वसुतानि च ॥ 74

ये चोरा वसुहर्तारो दुष्टा ये च हिंस्रकाः ।
अन्तरायकरा दुष्टाः छद्मकाः ये दुरात्मकाः ॥ 75

दुर्हृदो दुष्टभूपाला दुष्टामात्याश्च घातकाः ।
ये च कार्यविलुप्तारो ये खलाः परिपन्थिनः ॥ 76

CC-0. Saraswati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सर्वस्वहरणा ये च महामायाविनोऽपि ये ।
महाक्लेशकरा म्लेच्छा दस्यवो वृषलाश्च ये ।। 77

ये महागरदातरो वञ्चकाः शश्त्रपाणयः ।
ये पापा दुष्टकर्माणो दुःखदा दुष्टबुद्धयः ।। 78

व्याजकाः कुपथासक्ता ये च नानाभयप्रदाः ।
छिद्रान्वेषकरा नित्यं येऽस्मान्बाधितुमुद्यताः ।। 79

ते सवै कार्तवीर्यस्य महाशङ्खरवाद्धताः ।
सहसा विलयं यन्तु दूरादेव विमोहिताः ।। 80

ये दानवा महादैत्या ये यक्षा ये च राक्षसाः ।
पिशाचा ये महासत्वा ये भूता ब्रह्मराक्षसाः ।। 81

अपस्मारग्रहा ये च ये ग्रहा पिशिताशिनः ।
महालोहितभोक्तारो वेताला ये च गुह्यकाः ।। 82

गन्धर्वाप्सरसस्सिद्धाः ये च देवादियोनयः ।
डाकिन्यो धोणसाः प्रेता क्षेत्रपाला विनायकाः ।। 83

महाव्याघ्रमुखाः क्रूराः महातुरगमूर्तयः ।
महाव्यघ्रा महामेषाः महामहिषसन्निभाः ।। 84

महाराजो महासिंहः महाभल्लूकसन्निभाः ।
ऋक्षवाराहशुनकवानरालूकमूर्तयः ।। 85

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

महोष्ट्रखरमार्जारसर्पगो विषपुच्छकाः ।
नानारूपमहासत्वाः नानाक्लेशसहस्रधाः ।। 86

नानारोगकराः क्षुद्रा नानावीर्याः महाबलाः ।
वातका पैत्तिका घोराश्श्लेष्मिकास्साक्षिपातिकाः ।। 87

माहेश्वरा वैष्णवाश्च वैरिञ्चश्च महाज्वराः ।
स्कान्दा वैनायकाः क्रूराः ये च मन्मथसंज्ञिकाः ।। 88

महाशत्रुग्रहा रौद्रा महामारीमसूरिकाः ।
एकाह्निका द्व्याह्निकाश्च त्र्याह्निकाश्च महाज्वराः ।। 89

साप्ताहिकाः पाक्षिकाश्च मासषाण्मासिकाश्च ये ।
संवत्सरा दुर्निवार्याः ज्वराः परमदारुणाः ।। 90

स्वाप्निकाश्च महोत्पाताः ये च दुःस्वप्नजा ग्रहाः ।
कूष्माण्डा भैरवा भीमाः धोणसा निधिवञ्चकाः ।। 91

भ्रामकाः प्राणहन्तारो ये च बालग्रहादयः ।
मनोबुद्धीन्द्रियहराः स्फोटकाश्च महाग्रहाः ।। 92

महाशना बलिभुजो महाकुणपभोजनाः ।
दिवाचरा रात्रिचराः ये च सन्ध्यासु दारुणाः ।। 93

प्रमत्तमप्रमत्तं च ये मां बाधितुमुद्यताः ।
ते सर्वे हैहयेन्द्रस्य धनुर्मुक्तश्शरार्दिताः ।। 94

सहस्रधा प्रणश्यन्तु भग्नसत्वबलोद्यमाः ।
ये सर्पा ये महानागाः महागिरिविलेशयाः ।। 95

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कालाव्याला महादंष्ट्रा महाजगरसंज्ञिकाः ।
अनन्तगुलिकाद्याश्च दृग्विषाश्व महाभयाः ।। 96

अनेकशतवर्षाश्च खड्गपुच्छाश्च दारुणाः ।
महाविषजलूकाश्च वृश्चिका रक्तपुच्छकाः ।। 97

आशीविषाः कालकूटाः महाहालाहलाह्वयाः ।
जलसर्पा जलव्याला जलग्राहाश्च कच्छपाः ।। 98

मत्स्यका विषपुच्छा ये चान्ये जलनिवासिनः ।
जलजा स्थलजाश्चैव नानाभेदकुलोद्भवाः ।। 99

ये च षड्बिन्दवो लूताः भ्रमराः शूलपुच्छकाः ।
स्थावरा जङ्गमाश्चैव कृत्रिमाश्च महाविषाः ।। 100

गुप्ता विगुप्तारूपाश्च भूषिकाः गृहगोधिकाः ।
कृकलासा कुलीराश्च ये चान्ये यादसां गणाः ।। 101

स्मरणा विषमा घोरा महोग्रविषसंज्ञिकाः ।
येऽस्मान्बाधितुमिच्छति शरीरप्राणनाशकाः ।। 102

ते सर्वे कार्तवीर्यस्य खड्ग-साहस्रसादिताः ।
दूरादेव विनश्यन्तु प्रणष्टेन्द्रियमानसाः ।। 103

मनुष्याः पशवो ऋक्षाः वानराः वनगोचराः ।
सिंहव्याघ्रवराहाश्च माहिषा ये महामृगाः ।। 104

गजास्तुरङ्गाटव्या रासभाश्शरभा बृकाः ।
शुनका विपिनः शुंभमार्जाराः विषलोमशाः ।। 105

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

शृगालाः शशकाः श्येनाः गरुत्मन्तो विहङ्गमाः ।
भेरुण्डा वायसाः गृध्रा हंसाद्याः पक्षिजातयः ।। 106

उद्भिजाश्चाडजाश्चैव स्वेदजाश्च जरायुजाः ।
नानाभेदकुले जाताः नानाभूताः पृथग्विधाः ।। 107

येऽस्मान्बाधितुमुद्यन्ति सन्ध्यासु च दिवानिशि ।
ते क्षिप्रं कार्तवीर्यस्य चक्रसाहस्रखण्डिताः ।। 108

दूरादेव विनश्यन्तु विनष्टगतिपौरुषाः ।
ये चाक्षेपप्रदातारो द्वेष्टारो ये विदूषकाः ।। 109

कृत्यं यत्र प्रदातारः कूटमायाविनश्च ये ।
मारणोच्चाटनोच्चाटुद्वेषमोहनकारकाः ।। 110

विश्वस्तघातका दुष्टा ये च स्वामिद्रुहो नराः ।
ये चाततायिनो दुष्टा ये पापा गुप्तहारिणः ।। 111

दाहोपघातगरलशस्त्रपातनदुखदाः ।
क्षेत्रवित्तापहरणाः बन्धनादि बहुप्रदाः ।। 112

ईतयो विविधाकारा ये चान्ये दुष्टजातयः ।
पीडाकरा ये सततं क्षुद्रका घ्नन्ति सन्ततम् ।। 113

ते सर्वे कार्तवीर्यस्य गदासाहस्रचूर्णिताः ।
दूरादेव विनश्यन्तु लयं यान्तु सहस्रधा ।। 114

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ये मेधा ये महावर्षाः ये वाता याश्च विद्युतः ।
ये महाशनो ये दीप्ताः यो निर्घाताः सुदारुणाः ।। 115

उल्कापाताश्च ये घोराः ये महोन्द्रायुधादयः ।
अर्केन्दुकुजसौम्याश्च गुरुकाव्यशनैश्चराः ।। 116

राहुश्च केतवो घोरा नक्षत्रराशयस्तथा ।
तिथयस्सङ्क्रमा मासत्वयनायुगनायकाः ।। 117

मन्वन्तरस्सिद्धर्षयो योगसिद्धाः सदोज्वलाः ।
विधयो ऋग्यजुःसामात्यथर्वाद्याश्च वह्नयः ।। 118

ऋतवो लोकपालाश्च पितरो देवसन्ततिः ।
विद्याश्चैव चतुःषष्टिभेदोक्ता भुवनत्रये ।। 119

सेवन्ते कीर्तितास्सर्वे ये चान्येनानुकीर्तिताः ।
ते सन्तु नः सदा सौम्याः सर्वलोकसुखावहाः ।। 120

अज्ञया कार्तवीर्यस्य योगीन्द्रस्यामितद्युतेः ।
कार्तवीर्यार्जुनो धन्वी योगीन्द्रो हेहयेश्वरः ।। 121

दत्तात्रेयप्रियतमः सहस्रभुजमन्डलः ।
चापी खड्गी रथी बाणी चर्मवर्मी महाबलः ।। 122

सुभगः सुमुखः शान्तः चक्रवर्ती गुणाकरः ।
दशास्यदर्पहा रेवालीलातृप्तः सुदुर्जयः ।। 123

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

दुखहा चोरदमनो राजराजेश्वरः प्रभुः ।
सर्वज्ञः सर्वगः श्रीमान् सर्वशिष्टप्रदः कृती ।। 124

राजचूडामणिर्योगी सप्तद्वीपाधिनायकः ।
विजयी विश्रुतो वाग्मी महागतिरलोलुपः ।। 125

यज्वा विप्रप्रियो विद्वान् ब्रह्मज्ञो यस्सनातनः ।
माहिष्मतीपतिर्योद्धा महाकीर्तिर्महाभुजः ।। 126

सुकुमारो महावीरो मारिघ्नो मदिरेक्षणः ।
शत्रुघ्नः शाश्वतः शूरः शंखभृद्योगवल्लभः ।। 127

महाभागवतो धीमान् महाभयविनाशनः ।
असाध्यविग्रहो दिव्यो भयव्याप्तजगत्त्रयः ।। 128

सर्वशास्त्रकलाधारो विरजो लोकवन्दितः ।
वीरो मलिनचित्ताढ्यो महाबलपराक्रमः ।। 129

विजयश्रीमयो मान्यो जितारिर्मन्त्रनायकः ।
खड्गभृत्कामदः कान्तः कालघ्नः कमलेक्षणः ।। 130

भद्रवादाप्रियो वैद्यो वरदो विबुधो वशी ।
जितेन्द्रियो जिताराति: स्वच्छन्दोऽनन्तविग्रहः ।। 131

चक्रभृत्परचक्रघ्नः सङ्ग्रामविधिपूजितः ।
महाधनो निधिपतिर्महायोगी गुरुप्रियः ।। 132

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

योधाद्यो सर्वरोगघ्नो राजिताखिलभूषणः ।
दिव्यास्त्रविदमेयात्मा सर्वगोप्ता महोज्वलः ।। 133

सर्वायुधधरोऽभीष्टप्रदः परपुरञ्जयः ।
योगसिद्धो महाकायो महाबृन्दशताधिपः ।। 134

सर्वज्ञाननिधिस्सर्वभोगदानकृतोद्यमः ।
इत्यष्टशतनामोक्ता मूर्तयो दशदिक्पतेः ।। 135

सम्यक्दशदिशो व्याप्य पालयन्तु च मां सदा ।
सर्वेन्द्रियाणि सुस्थानि सुशान्तिश्च सदास्तु मे ।। 136

शिष्ठायामूर्तयोष्टौ च विक्रमेणैव भास्वराः ।
अग्निनिर्ऋतिवाय्वीशकोणगाः पान्तु मां सदा ।। 137

मनस्सौख्यमसम्बाधामरोगमपराजितम् ।
दुःखहा निरविघ्नश्च प्रजावृद्धिस्सुखोदयः ।। 138

वाञ्छावाप्तिश्च कल्याणं अवैषम्यमनामयम् ।
अनष्टद्रव्यरक्षा च नष्टस्य पुनरागमः ।। 139

धर्मायुष्यं यशोलाभस्सौकुमार्यमभीप्सितम् ।
अनालस्यमभीष्टं च मृत्युहानिर्बलोन्नतिः ।। 140

भयहानिः यशः कान्तिर्विद्यावृद्धिर्महाश्रयः ।
अप्रधृष्यं महत्वं च महासामर्थ्यकोविदः ।। 141


CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सन्तु मे कार्तवीर्यस्य हैहयेन्द्रस्य कीर्तनात् ।
य इदं कार्तवीर्यस्य कवचं पुण्यवर्धनम् ।। 142

सर्वपापप्रशमनं सर्वोपद्रवनाशनम् ।
सर्वसम्पत्करं गुह्यं समस्तभयनाशनम् ।। 143

विजयार्थप्रदं नृणां सर्वसम्पत्करं शुभम् ।
श्रुणुयाद्वा पठेद्वाऽपि सर्वान्कामानमाप्नुयात् ।। 144

आयुरारोग्यमैश्वर्यपुत्रपौत्रादिसम्पदः ।
भवन्ति सर्वदाऽभीष्टाः पुस्तकस्यापि पूजनात् ।। 145

मुच्यते सर्वदुःखैस्तु सर्वत्र विजयी भवेत् ।
मारीचोरादिपीडाद्यैर्न कदाचित्प्रबाध्यते ।। 146

पठतः प्रातरुत्थाय दुःस्वप्नादि विनश्यति ।
लभते वाञ्छितानर्थान् पूज्यते त्रिदशैरपि ।। 147

शय्यातलगतो रात्रौ च इदं कवचं पठेत् ।
न तस्य तस्करारातिः दुःस्वप्नादिभवं भयम् ।। 148

चोरैर्यदाहृतं पश्येत्पश्वादि धनमात्मनः ।
एकवारं जपेद्यस्तु सर्वाभीष्टफलप्रदम् ।। 149

सप्तवारं तथा जप्त्वा निशि पश्चिमदिङ्मुखः ।
सप्तरात्रेण लभते नष्टद्रव्यं न संशयः ।। 150

CC-0. SarasVati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सप्तविंशति वारं तु प्राचीदिग्वदनो यदि ।
तदा देवासुरयुतं परचक्रं निवारयेत् ।। 151

विवादे विपुले घोरे पञ्चवारं पठेदिम् ।
विजयो जायते तस्य न कदाचित्पराजयः ।। 152

सम्यक् द्वादशधा रात्रौ प्रजपेद्बाधमुक्तये ।
त्रिदिनान्निगलग्रस्तो मुच्यते न विचारणा ।। 153

अनेनैव विधानेन सर्वसाधनकर्मणि ।
असाध्यमपि सप्ताहात्साधयेन्मन्त्रवित्तमः ।। 154

यात्राकाले पठित्वेदं मार्गं गच्छति यः पुमान् ।
न दुष्टचोरव्याघ्राद्यैः भयं स्यात्परिपन्थिनः ।। 155

नित्यं ग्रहगतो जित्वा कल्याणैः परिपूर्यते ।
न भयं जायते तस्य दुष्टसत्वादिभिः क्वचित् ।। 156

सर्वरोगप्रपीडासु त्रिधा वा पञ्चधा पठेत् ।
सरोगमृत्युवेतालभूतप्रेतैः प्रमुच्यते ।। 157

पठनात्स्मरणात्कुर्याज्जलेनाञ्जलिना रवौ ।
स चाग्निविषकृत्यासु रोगस्फोटैर्न बाध्यते ।। 158

त्रिसन्ध्यासु पठेदेतत् षण्मासं विजितेन्द्रियः ।
कालमृत्युमपि प्राप्तं जयत्यत्र न संशयः ।। 159

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पठतः कवचं चेदं विषं नाक्रमते तनौ ।
जडान्धत्वं च मूकत्वं नोपसर्गभयं क्वचित् ।। 160

विंशद्वर्णोक्तविधिना धार्येदेवं तदात्मकम् ।
मन्त्री गुरुप्रसादात्तं मन्त्रराजं जपेत्पुनः ।। 161

कवचेनावृतो भूयो मन्त्रध्यानं समाचरेत् ।
यथोक्तं लभते सद्यः फलं वज्रतनुर्भवेत् ।। 162

यथा तथेदं कवचं न कस्यापि प्रकाशयेत् ।
आदौ संशोधनं कृत्वा तन्नाम ध्यानपूर्वकम् ।। 163

सिद्ध्यै तच्चक्रमन्त्राणां उच्चरेत् द्विजपूर्वकम् ।
गोपनीयं प्रयत्नेन शिवस्य वचनं तथा ।। 164

सुभक्ताय सुशिष्याय दद्यात्सर्वस्वदायिने ।
साधकानां हितार्थाय यदुक्तं चन्द्रमौलिना ।। 165

कार्तवीर्यस्य कवचं यदुक्तं वै मया तव ।
येनैदं रक्षतो देहः कालेनापि न जीर्यति ।। 166

तस्मात्सर्वप्रयत्नेन कवचं धारयेत्सुधीः ।

**।। इति श्रीकार्तवीर्यार्जुनकवचं संपूर्णम् ।।**

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

# कार्तवीर्यार्जुनमालामन्त्रः

श्री सरस्वत्यै नमः ।। श्रीगणेशाय नमः ।।
ओं अस्य श्री कार्तवीर्यार्जुनमालामन्त्रस्य ।
दत्तात्रेयो भगवान् ऋषिः ।।
गायत्री छन्दः ।।

कार्तवीर्यार्जुनो देवता ।
कृतवीर्यो बीजम् । सहस्रबाहुः शक्तिः । अव्याहतः कीलकम् ।
कार्तवीर्यार्जुनप्रसादसिद्ध्यर्थे जपे विनियोगः ।

दत्तात्रेयप्रियतमाय अङ्गुष्ठाभ्याम् नमः ।
महिष्मतीनाथाय तर्जनीभ्याम् नमः ।

कोदण्डेषु सहस्रसम्मितकरेष्वेनेष्वजस्रंलस-
त्कोदण्डैश्च शरैरुदग्रानिशितैरुद्यद्विवस्वत्प्रभः ।
ब्रह्माण्डं परिपूरयन्तमखिलं गण्डद्वयान्दोलित
द्योतत्कुण्डलमण्डितो विजयते श्रीकार्तवीर्यो विभुः ।।

।। करतलनेत्रवर्जितम् ।।

ओं नमो भगवते श्रीकार्तवीर्यार्जुनाय ।। हैहयसहस्रकवचाय
सहस्रकरद्धराय ।। सर्वदुष्टान्तकाय ।।
सर्वत्र उदधेरागन्तुकामानस्मद्वस्तुविलुपकान् ।।

चोरसमूहान् स्वकरस्त्रैः निवारय निवारय ।।
उज्वलपाशसहस्रैः बन्धय बन्धय
अङ्कुशसहस्रैराकर्षय आकर्षय

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्वचापोद्गतैर्बाणसहस्रैः भिन्धि भिन्धि
स्वहस्तोद्गत – खट्वाङ्ग – सहस्रैः छिन्दि छिन्दि
स्वहस्तोद्गतमुसल सहस्रैर्मर्दय मर्दय!
स्वशङ्खोद्गत – नाद – सहस्रैः भीषय भीषय
स्वहस्तोद्गतचक्रसहस्रैः चूर्णय चूर्णय
त्रासय गर्जय आकर्षय मोहय मारय उन्मादय
।। तापय विदारय
तापय विदारय ।।
।। स्तम्भय स्तम्भय
जृम्भय जृम्भय ।।
वारय(2) वशीकुरु(2) उच्चाटय(2) निनाशय(2)दत्तात्रेय श्रीपादप्रियतम
कार्तवीर्यार्जुन सर्वत्रोदधेरागन्तुकामानस्मद्वस्तु–
विलुंपकान् समुन्मूलय हुं फट् स्वाहा (2) ।।
अनेन मन्त्रराजेन सर्वकामांश्च साधयेत् [त्रिसहस्रं जपः]
(प्रोक्तं हवनं च यथाविधि)
माला मन्त्रजपाच्चोरान् मारींश्चैव विशेषतः।
क्षपयेत्क्षोभयेच्चैवोच्चाटयेन्मारयेत्तथा ।।
वशयेत्तत्क्षणादेव त्रैलोक्यमपि मन्त्रवित् ।।

।। इति श्रीकार्तवीर्यार्जुनमालामन्त्रस्संपूर्णः ।।

CC-0. Saraswati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

# कार्तवीर्यार्जुनमन्त्रः

श्री गुरुगणपतये नमः ।। श्रीदत्तात्रेयाय नमः ।।

अथ ध्यानं प्रवक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ।
यं निजध्यानमात्रेण शत्रवो यान्ति संक्षयम् ।। 1

रणाजिरे जयोदग्रं रणत्किङ्किणिजालकम् ।
जगद्धिताय संरन्धं नदज्जलदनिस्वनम् ।। 2

मदभ्रमरझङ्कारपतद्भ्रमरमस्तकम् ।
क्वणाकनकघसृणारुझणत्कृतिचमत्कृतिम् ।। 3

परिश्रमणवैचित्र्यजितत्रिदशसिन्धुरम् ।
उदग्रमणिमालाक्षिरुदश्चिमुखमण्डलम् ।। 4

अतिप्रबलशुण्डाग्रविलग्नमुसलायुधम् ।
करिप्रवरमारुह्य गिरिप्रतिनिभाकृतिम् ।। 5

अधिष्ठितमहासत्वप्रतिष्ठितजगत्त्रयम् ।
अधिध्यदृढसन्धानं धनुश्शतमखानुगम् ।। 6

मुसलादि कुठारादि पाशचर्मधरावृतम् ।
प्रत्यस्रं दधतं देवं सहस्रवरबाहुभिः ।। 7

निबद्धकवचं देवं पिनद्धीवरबन्धनम् ।
प्रबुद्धसचिवानीतं प्रसिद्धबलपौरुषम् ।। 9

प्रबोधितजगच्चक्रं प्रवर्धितधनागमम् ।
नीलनीरद सङ्काशं नित्याम्बु-निभाननम् ।। 10

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

विराजासक्तनयनं नीलकुञ्चितमूर्धजम् ।
महनीयमहानीलमणिकुण्डलमण्डितम् ॥ 11

रमणीयतरं वीरं विविधैरपि भूषणैः ।
भुजगाधिपभोगाभभुजमण्डलमण्डितम् ॥ 12

दृढपीवरपश्चास्यपृथुकन्दुरमन्दरम् ।
कमनीयमणिप्रोततपनीयनवस्रजम् ॥ 13

तरसा महितं देवं महसामधिपं जनम् ।
नदन्तमिव कल्पान्ते भवन्तमतिभीषणम् ॥ 14

वमन्तमिव कालाग्निं दहन्तमिव पावकम् ।
किरन्तमिषुवेषेण स्फुरन्तमिव भास्करम् ॥ 15

कृतान्तमिव निर्यातं युगान्तरविपर्यये ।
मृगेन्द्रमिव गर्जन्तं तर्जन्तमरिमण्डलम् ॥ 16

ग्रसन्तमिव लोकाङ्घ्रिं नुदन्तमतिभीषणम् ।
द्विषन्तमतिवेगेन निहन्तं कृतनिश्चयम् ॥ 17

प्रचण्डतरकोदण्डप्रभिन्नपरसैनिकम् ।
प्रतपन्तमिवादित्यं प्रचरन्तमितस्ततः ॥ 18

प्रदहन्तमरीनन्तः प्रविशन्तमरिन्दमम् ।
क्वचित्प्रचण्डकोदण्डचण्डभैरवनिस्वनम् ॥ 19

क्वचिन्मनोजवोत्तुङ्गतुरङ्गममधिष्ठितम् ।
क्वचिद्रक्तांभुरोचिष्णुरथोपरिविनिष्ठितम् ॥ 20

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

क्वचिच्चक्रसहस्रेण कृन्तयन्तं क्रुधा रिपून् ।
कचिच्छङ्खसहस्राणां मोहयन्तं महारवैः ॥ 21

क्वचिच्चर्मासिसाहस्रविदारितविरोधिनम् ।
क्वचित्कठोरसाहस्रकुठारादिविमर्दनम् ॥ 22

क्वचित्पाशाङ्कुशधरं क्वचिन्मुसलधारिणम् ।
क्वचिदादत्तपरिघं मर्दयन्तं रिपून्क्रमात् ॥ 23

रथनागतुरङ्गदि पतिभिः सहसासितैः ।
चोरमारिविपक्षाद्यैर्दशभिः परितोवृतम् ॥ 24

अङ्गैरपि समायान्तं निषङ्गेषु शरासनैः ।
आसेवितमनाधृष्यं अमलैरात्तकञ्चुकैः ॥ 25

पुरन्दरपरेतेशपाशायुधधनाधिपैः ।
समीरणसहायाग्रनिर्ऋत्यनिलशूलिभिः ॥ 26

स्वकाष्टादिगतैः स्वस्ववाहनायुधभूषणैः ।
भीषणैः परितो वीतं परसैन्यविदारणैः ॥ 27

अतिप्रमाणाकारेण संक्रान्ताशान्तमर्जुनम् ।
पदत्रितयसंक्रान्तलोकत्रयमिवाच्युतम् ॥ 28

आचिन्त्य विभवं देवं विचिन्त्यैवं विभोः पदम् ।
आमन्त्र्य निजहृद्वाच्यां स्वमन्त्रजपमारभेत् ॥ 29

अनुष्टुभाणां मन्त्राणां ऋषिरस्य स्वरस्य च ।
दत्तात्रेयोऽपि भगवान् छन्दोऽनुष्टुप् उदाहृतम् ॥ 30


CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कार्तवीर्यार्जुनो विष्णुः देवता परिकीर्तितः ।
रक्षायै वाञ्छिताप्त्यै च विनियोगोऽरिनिग्रहे ।। 31

रं क्षं यम् । कृतान्त इव कल्पानां गर्जन्जृम्भितोऽर्जुनः ।
अस्मद्विरोधिनामायुर्हरत्वतिभयंकरः ।। रं क्षं यम् ।। 32

(मूलमन्त्रः)

ठं क्रों ।। आबध्नामि दृढपाशैरलमस्मद्विरोधिनम् ।
स्वादिरे ध्मे महत्यग्नौ क्षिपत्वक्षरपविक्रमः ।। ठं क्रों ।। 33

रें रिं ।। युगान्तघननिर्घातनिर्झरैरतिभीषणैः ।।
अस्मद्रिपोर्हरत्वायुरर्जुनः शंखनिस्वनैः ।। रें रिं ।। 34

धं नुं ।। धनुः पञ्चशतध्वाननिर्गतप्राणमारुतम् ।
कल्पान्तरुद्रकल्पोऽसौ कुर्यान्मे रातिभञ्जनम् ।। धं नुं ।।35

स्वां लं ।। मल्लैरुल्लसितफलैरुज्वलद्भिः विचेतसम् ।
कुर्यादनार्यमार्यस्मदरातिं कृतवीर्यजः ।। स्वां लं ।। 36

प्रों हुं ।। स्वबाहुनिर्गतैः पञ्चशतसंख्यैस्सिताशुगैः ।
शिरः कृन्ततु मच्छत्रोर्जितशत्रुगणोर्जुनः ।। प्रो हुं ।। 37

क्लीं ह्रीं ।। अतितीक्ष्णकरैरुग्रैररिनिग्रहविग्रहे ।
करवालैः कराळाग्रैश्छिन्द्यात् मदरिमर्जुनः ।। क्लीं ह्रीं ।। 38

गं आं ।। गदाभिरतिभीमाभिरायसाभिररिन्दम ।
संहारकालसम्बन्धभीमनिर्घातभीषणैः ।। गं आं ।। 39

सर सर ।। मुसलैःखलसङ्गेऽरिं निदर्यं मर्दयार्जुन ।
आयताभिरनायासं हन हेहय भूपते ।। सर सर ।। 40

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

युं अं ।। युगान्तोद्गतगम्भीरमहानिर्घोषनिष्ठुरम् ।
अट्टहासैरराति मे हन हेहय भूपते ।। युं अं ।। 41

नं सं ।। सहस्रकरसाहस्र दुस्सहोदग्रतेजसे ।
नमस्तुभ्यं सहस्रारे हन हेहय मद्रिपून् ।। नं सं ।। 42

करुकालि ।। कालकण्ठगलाकारकरालाकृतिमर्जुन ।
कालिभ्योऽलिबलिं दद्यादस्मद्रिपुकलेबरम् ।। 43

घण घण ।। अतिनीलगजारुढो निरूढामितविक्रमः ।
आघट्टतु ममारातिमर्जुनो निशितांशुकैः ।। घण घण ।।44

युं दं ।। युगान्तकर्बुरोदग्ररोचिषा चक्षुषा त्वचि ।
दह देव ममारातिं दह भूयो हरार्जुन ।। युं दं ।। 45

ठं सुं ।। गाढं गृहीत्वा केशेषु भ्रामयित्वाऽतिवेगतः ।
प्रक्षिप्योच्चैर्व्यसुं भूमौ पातयारिं ममार्जुन ।। ठं सुं ।। 46

सं हां ।। त्वयि गर्जितसंग्रामे संरम्भो जृम्बतेऽर्जुन ।
ब्रह्माण्डमपि भिन्नाण्डं भवेत्किमरिमण्डलम् ।। सं हां ।। 47

नं रो मं ।। मध्यन्दिनदिनाधीशामन्निरीक्ष्याति भीषणः ।
क्षणेनैव ममारातिं कुर्यान्निर्जीवमर्जुनः ।। नं रों मं ।। 48

खं डं ।। अतिभीषणानिर्घोषो युधि निर्जितशात्रवः ।
अलमस्मदरिं कुर्यादचिरायुषमर्जुनः ।। खं डं ।। 49

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नर नर ।। अविचारमनाचारमचिरादचिरायुषम् ।
रचयेदचिरापातैरिषुभिर्मेऽरिमर्जुनः ।। नर नर ।। 50

हं सां ।। परचक्रविनिर्भिन्नरथचक्रविमर्दनम् ।
मम शत्रुमिमं हन्याज्जितशत्रुगणोर्जुनः ।। हं सां ।। 51

नां षं ।। कालमेघनिभं कालं कालकण्ठातिभीषणः ।
कालायसधनुः कालवशं नयतु मे रिपुम् ।। नां षं।। 52

धं फं ।। अधिवारणमारूढो मदवारणाविक्रमः ।
विदधारुणोऽक्षोस्मदरिमारणमर्जुनः ।। धं फं ।। 53

मं दं ।। परायुहरणो घोरधुरीणमदवारणम् ।
नियोधय ममारातिं हरणे हेहयेश्वर ।। मं दं ।। 54

जं ञं ।। खरकोटिखुरापातक्षितिरेणुसमुत्थितैः ।
हयसादिभिरद्यैव हन मे रिपुमर्जुन ।। जं ञं ।। 55

विं शं ।। प्रलयेश समादिष्टः प्रमथैरिव सद्भटैः ।
परिकृन्तय मच्छत्रून् शरणं भव मेऽर्जुन ।। विं शं ।। 56

खों लिं ।। प्राचीमाश्रित्य हरितं यातमस्मद्विरोधनम् ।
निहन्यान्निशितैश्शस्त्रैश्चोरमारीविभञ्जनः ।। खों लिं ।।57

जं रिं ।। दिशा दक्षिणया यादं निगृह्यास्मद्रिपुन् बलात् ।
निहन्याद्धृतचापेषुमहामारीविभज्जनः ।। जं रिं ।। 58

CC-0. Saraswati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

क्रां क्रीं ।। पश्चिमया दिशा यातपरेतप्रग्रहातिथिम् ।
तनोत्वस्मद्रिपुं भल्लैर्निगृह्येदरिभञ्जनः ।। क्रां क्रीं ।। 59

सं फिं ।। सौम्याशया समाक्रान्तं समाक्रान्तं सुरेश्वर ।
समापयतु सर्वायुः मदरेः सौम्यदिक्स्थितः ।। सं फिं ।। 60

रां लां ।। गृहीतचापबाणोसौ बली दुष्टनिबर्हणः ।
निबर्हयतु  मच्छत्रुं मखच्छकहरिस्थितः ।। रां लां ।। 61

डं फुं ।। द्विषन्तं मम देवेश विशन्तं मारुताशयात् ।
विशन्तं विशिखैरेनं निहन्याद्दुरितापहः ।। डं फुं ।। 62

शिवाशया विवृद्धस्य शिताङ्कुरशिलीमुखैः ।
शिरश्छेदय मच्छत्रोर्महामायाविभञ्जन ।
ॐ अः ।। ऊर्ध्वाशयोत्पतिष्यन्तं मद्विषन्तं महाबल ।
महाचक्रेण विच्छिद्यान्महामृत्युविभञ्जन ।। ॐ अः ।।63

औं डं ।।  रसारन्ध्रामप्यस्मत्सपत्नमधराशया ।
शंखध्वानेन विध्वस्ते स हन्याद् दुःखभञ्जनः ।। औं डं।। 64

श्री दत्तात्रेयो जयतु ।।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

# कार्तवीर्यार्जुनमन्त्रः

अस्य श्रीकार्तवीर्यार्जुन महामन्त्रस्य ।
दत्तात्रेय ऋषिः (शिरसि) ।

अनुष्टुप्छन्दः । (वदने)
कार्तवीर्यार्जुनो देवता (हृदये) ।

क्रौं बीजम् (लिङ्गे)
क्लीं शक्तिः (वृषणयोः)
अभीष्टार्थजपे विनियोगः (पादयोः) ।

मूलेन व्यापकम् ।

ओं फ्रों व्रीं अङ्गुष्ठाभ्याम् नमः ।

ओं क्लीं ब्लूं तर्जनीभ्याम् नमः ।

ओं आं ह्रीं मध्यमाभ्याम् नमः ।

ओं क्रों श्रीं अनामिकाभ्याम् नमः ।

ओं ड्डुं फट् कनिष्ठिकाभ्यां नमः ।
स्वाहा करतलपृष्ठाभ्याम् नमः ।

एवं हृदयादि न्यासः ।

कार्त्तवीर्यार्जुनाय नम इति व्यापकम् ।

ओं फ्रौं ओं हृदयाय नमः ।

ओं व्रीं ओं (ऊरुभ्याम्)

ओं क्लीं ओं (नाश्यां)

CC-0. Sarāsvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ओं ब्लृं ओं (जानुभ्याम्)

ओं आं ओं (गुह्ये) ।

ओं द्रीं ओं (दक्षिणोरुभ्याम्) ।

ओं फ्रों ओं (वामोरुभ्याम्)।

ओं श्रीं ओं (दक्षिणजानौ) ।

ओं हुं ओं (वामाजानौ) ।

ओं फट् ओं (पादयोः) ।

ओं कां ओं (शिरः) ।

ओं र्त्तां ओं (दक्षिणभ्रूमध्ये) ।

ओं वीं ओं (वामभ्रूमध्ये) ।

ओं र्थां ओं (कर्णयौः) ।

ओं र्जुं ओं (अक्षणोः) ।

ओं नां ओं (नासिकायाम्) ।

ओं यं ओं (मुखे)

ओं नें ओं (कण्ठे) ।

ओं मं ओं (दक्षिणबाहौ) ।

सर्वमन्त्रेणास्त्रेण व्यापकम् । (स्वात्मैक्येन ध्यायेत्) ।

अव्यात्सर्वभयात्प्रभाकरनिभः प्रद्योतनोद्योतितः

स्वर्णस्रगोपरि वीतकन्धरधरो रक्तांशुकोष्णीषवान् ।

नानाकल्पविभूषितः करसहस्रार्धात्तबाणासनो

बाणार्धात्तसहस्रबाहुरनिशं भ्रूवल्लभो नः प्रभुः ।।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सप्तद्वीपैकनाथस्सवितृसमरुचिः सर्वदुष्टान्तको नः

पायादब्जायताक्षो रथवरनिलयश्शूलकायोऽतिभीमः ।

चापान्तेषु त्रिलोकीकरधृतधनुषो निस्स्वनैस्त्रासमानः

स श्रीमान्कार्त्तवीर्यो निखिलनृपनताङ्घ्र्यंबुजक्षिप्रकारी ।।

इति ध्यात्वा जपेत् ।

**अथमालामन्त्रः ।।**

अस्य श्री कार्तवीर्यार्जुनमहामन्त्रस्य ।

दत्तात्रेय ऋषिः । गायत्री छन्दः ।

श्रीकार्तवीर्यार्जुनो देवता ।

इष्टसिद्ध्यै जपे विनियोगः ।

दत्तात्रेयप्रियतमाय हृदयाय नमः ।

माहिष्मतीनाथाय शिरसे स्वाहा ।

रेवाजलक्रीडासक्ताय शिखायै वषट्

हैहयाधिपतये कवचाय हम्

.... नेत्रत्रायाय वौषट्

सहस्रबाहवे अस्त्रायफट् ।

भूर्भुवस्सुवरोमिति दिग्बन्धः । दिग्विमोकः ।

**।।ध्यानम् ।।**

दोर्दडैकसहस्रसम्मितकरेष्वेतेष्वजस्रंदध-

त्कोदण्डैस्सशरैरुदग्रविशिखैरुद्यद्द्विवस्वत्प्रभुः ।

ब्रह्माण्डं परिपूरयन्तमखिलं गण्डस्थलालोडिनः

द्योतत्कुण्डलमण्डितो विजयते श्रीकार्तवीर्यः प्रभुः ।। 1

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चक्रेषुखड्गमुसलाख्यकुठारपाश
प्रासाख्यचर्मधनुशंखधरम् स्वहस्तैः
दक्षोत्तरैः प्रतिशतैररुणाम्बराढ्यं
मध्यन्दिनार्कसदृशं स्मरतातिघोरम् ।। 2

रक्तांबराख्यमतिभीषणमेकनाथं
नीलांबुम्बुदाभगजपृष्टगतं त्वदन्यैः ।
संवेष्टितं सकलदुःखहरं विशिष्टं
शिष्टेष्टदम् सकलदुःखनिवारणाय ।। 3

ओं नमो भगवते कार्तवीर्यार्जुन,
सहस्रकरसदृश सर्वदुष्टान्तक,
सर्वतोरुदधेरागन्तुकानस्मद्वसुविलुम्पकान् चोरसमूहान्
वक्त्रसहस्रैर्निवारय निवारय, रुन्धय रुन्धय

स्वपाशसहस्रैर्बन्धय बन्धय, अंकुशसहस्रैराकुञ्चय
आकुञ्जय, चापोद्गतबाणसहस्रैर्भिन्धि भिन्धि
स्वहस्तोद्गतखड्गसहस्रैश्छिन्धि श्छिन्धि स्वहस्तोद्गतमुसल
सहस्रैर्मर्दय मर्दय स्वशंखोद्गतनादसहस्रैर्भीषय भीषय

स्वहस्तोद्गतचक्रसहस्रर्निकृन्तय निकृन्तय त्रासय त्रासय
विदारय विदारय स्तम्भय स्तम्भय मारय मारय ।।


CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वशीकुरु वशीकुरु, उच्चाटयोच्चाटय, भञ्जय भञ्जय,
दत्तात्रेयश्रीपादप्रियतम, श्रीकार्तवीर्यार्जुन,
सर्वतोरुदधेरागन्तुकानस्मद्वसुविलुम्पकान्
चोरसमूहान्सम्यगुन्मूलयोन्मूलय ।।

ध्यानम् । पञ्चपूजा पूर्वोक्तरीत्या हृदयादिन्यासः
जपसमर्पणम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

# विंशत्यक्षरमन्त्रः

श्रीगणेशाय नमः ।

ध्यात्वा पूजामारभेत् ।। तस्मिन्नादौ वैस्मवम् ।।

पीठं तत्पूजने नेत्रादौ स एव क्रम उच्यते ।।
(स्ववामभागे) गुं गुरुभ्यो नमः ।

परमेष्टिगुरुभ्यो नमः । परापरगुरुभ्यो नमः ।

(दक्षिणभागे) गं गणेशाय नमः ।

सरस्वत्यै नमः । दें दुर्गायै नमः । क्षं क्षेत्रपालाय नमः ।
(गृहमध्ये) वं वास्तुपुरुषाय नमः ।

मं मण्डूकाय नमः ।

(पीठमध्ये) कालाग्निरुद्राय नमः । कूर्माय नमः ।
आधारशक्त्यै नमः ।

(इत्यभ्यर्च्य) ओं -- द्वीपाय नमः । ओं रत्नमण्डपाय नमः ।
ओं कल्पवृक्षाय नमः । ओं रत्नवेदिकायै नमः ।
ओं रत्नसिंहासनाय नमः । (इत्यभ्यर्च्य)
आग्नेयादि पीठपादेषु धर्मादींश्च चतुर्दिक्पालकान् ।

पीठगात्रेषु पूर्वादिमधर्मादींस्तथैव च ।। 1

कर्णिकायां तथाऽनन्ते कन्दं .. सरोरुहम् ।
पत्राणि केसरांश्चै कर्णिकाञ्च तथा यजेत् ।। 2

ताराकैग्न्यवर्णप् ......... दुत्रिमण्डलम् ।
गणत्रयं च सत्वादि ततश्चात्मचतुष्टयम् ।। 3

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मायातत्वं कालतत्वं वि ....परं तथा ।
एकैकोपरि संपूज्य ततो शक्तिं यजेन्नव ।। 4

विमलोत्कर्षिणी ज्ञानाक्रियायोगश्च पञ्चमी ।
प्रज्ञासत्यान्तयेशानानुग्रहा नवमी परा ।। 5

सर्वादृष्टेषुपत्रेषु कर्णिकायां यजेत्क्रमात् ।
चतुर्धा नवधा युक्तैः स्वैस्वैरेव च नामभिः ।। 6

कर्णिकायां यजेत्पश्चात् पीठमन्त्रेण मन्त्रवित् ।
ओं नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय
सर्वयोगात्मने योगपीठात्मने नमः ।

अनेन पुष्पाञ्जलिं दद्यात् ।
इति संपूजिते पीठे देवीमावाह्य पूजयेत् ।
अथ देवपीठे यन्त्रं स्थापनीयम्
चैतन्यविग्रहं देवं स्थितं हृदयपङ्कजे ।
श्वासमार्गेण सततं चिन्तयेत्कुसुमाञ्जलौ ।। 1

पादुकामुद्रयानीय मूर्त्तौ संयोज्य सिद्धया ।।

तत्र पूजा क्रमः । आवाहनादिमुद्राः

CC-0. Saraswati Mahal Series. Digitized by Sri Muthulakshmi Research Academy




पुष्पाक्षतादिभिः पूर्वदिक्क्रमेण पूजयेत् ।

पूर्वे चोरमार्यै नमः ।

दक्षिणे सुरार्यै नमः ।

पश्चिमे अरिमार्यै नमः ।

उत्तरेतन्मदविभञ्जिकायै नमः ।

स्फटिकाखड्गचर्मधरा वीरा सर्वाभरणभूषिताः
ईशाग्नेयनैर्ऋत्यवायव्येषु दुःखनाशनम् ।

दुष्टनाशना दुरितनाशना आमयनाशना

रक्तवर्णा बाणबाणासनधरा

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सर्वाभरणयुक्ताः ईशान्यादिषु
अष्ट दिक्षु क्षेमङ्करीवश्यकरी श्रीकरी च यशस्करी
आयुःकरी प्रज्ञाकरी विद्याकरी धनकरी
एतास्सितप्रभावरदाम्बुजधरारत्नांशुकप्रावरणा हरकुण्डलोल्लसिताः ।
हैहयनाथमनोज्ञा ध्यायेत्सौन्दर्यलसिताः प्रमदाः ।
अथ इन्द्रादि दिक्पालान् पूजयेत् ।
पश्चात् नवार्णवेन ।
आवाहनार्घ्यपाद्याचमनीयमधुपर्कस्नानवसनाभरण–
गन्धपुष्पधूपदीपनैवेद्यचन्दनम् स्वागतम् ।
अगरु श्रीखण्डं चन्दनैरर्चिताकृतिम् ।
आलिप्तं भक्त्या राजेन्द्र ददाति परमेप्सितम् ।
मल्लिकामालतीजातीकेतक्याशोकचम्पकैः ।
पुन्नागनागबकुलैः पद्मकैरुत्पलादिभिः ।
एतैरव्यैच्चकुसुमैः प्रशस्तंपूजनं करैः
नोग्रगन्धीनि पुष्पाणि नागन्धं न च कण्टकम् ।
कण्टकीनामपि भुक्तं जलजं च विशेषतः ।
सुगन्धमपि यद्द्यान्नरक्तं च कदाचन ।
पाटली ।
कुड्मली ।
शाल्मली ।
शिरीष करवीरजपाकुसुमानि ।
पुष्पाभावे पत्राणि ।
अपामर्गः भृंगराजः । खदिरः शमी । छना । बिल्वः ।
तुलसी । सर्वाभावे दूर्वाङ्कुराः । जटामांसी । गुग्गुलः ।
देवदारु । शर्करा । कर्पूरघृतमिश्रितधूपः । दीपस्थगुडखंड–

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

देवदारु । शर्करा । कर्पूरघृतमिश्रितधूपः । दीपस्थगुडखंड–विमिश्रितमन्नं नैवेद्यम् । मन्त्रहीनमिति वन्दनम् । स्वागतं प्रार्थना ।

अर्घ्यपाद्याचमनं मधुपर्काचमनान्यपि गन्धादयो निवेद्यान्ताः ।

पञ्चोपचाराः प्रकीर्तिताः । उपवीतं श्वेतं इति पूजनम् ।

सर्वेषामेव मन्त्राणां स एषः क्रम उच्यते । न्यासं ध्यानं
ततो पूजाजपस्तदनन्तरम् ।

अथ मन्त्रः ।

ओं प्रों प्रीं क्लीं ब्लूं आं ह्रीं क्रों श्रीं
हुं फट् कार्तवीर्यार्जुनाय नमः । जपादौ अन्ते गायत्री जपः ।
एवं कृत्वा जपेल्लक्षं सम्यतात्मा जितेन्द्रियः ।
मन्त्रवर्णभेदः ।
क्लीं क्लेशकरम् भ्रूं भीतिकरम् ।
आं आकर्षणकरम् ।
ह्रीं उन्मादस्तंभनमोहनं च ।
ओं सर्वसिद्धिदम् ।
क्रौं मारणे ।
फ्रों स्फोटने श्रीं श्रीप्रदम् ।
च्रीं विद्वेषणे
अयं मन्त्रम् कार्यसिद्धिदम् ।
कार्यवशाद्गतवर्णभेदः ।
इति विंशत्यक्षर मन्त्रः समाप्तः प्रणवसहितः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

# कार्तवीर्यामहामन्त्रः
## (ब्रह्मकृतम्)

श्री गणेशाय नमः ।

ब्रह्मो उवाच ।

शृणु नारद सर्वज्ञ गुह्यात् गुह्यतरं महत् ।
कार्तवीर्यश्चायं विष्णुः चक्रवर्त्ती च देवता ।। 1

कार्तवीर्य महामन्त्रः त्रिलोकेषु सुदुर्लभः ।
तस्य मन्त्रमयं कृत्वा लिखित्वा बीजमक्षरम् ।। 2

स्वर्णपात्रे तदारोप्येताभ्रंकथिलमेव च ।
सुदिने यन्त्रं कुर्यान्मर्त्यलोके च मानवाः ।। 3

यन्त्रारम्भे तु ब्राह्मणाय हिरण्यं गोधुमं गुडम् ।
आज्यं च दापयेत् प्रातः सर्वकार्येषु सिद्धये ।। 4

दशबीजाक्षरेणैव प्रतिष्टां प्राण कारयेत् ।
कार्तवीर्यः प्रसन्नोऽस्मिन्वरं दत्वा यथेसितम् ।। 5

तन्नामस्मरणादेव लोको भवतु निर्भयः ।

त्वं विद्युत् त्वं परंज्योतिस्त्वं वेदपुरुषोत्तमश्च
(षोडशोपरिपूजयेत्)।
करिष्येऽहं च मध्याह्ने यथेष्टं सुखमिछति
यन्त्रं च पूजयेन्नित्यम् ।। 6

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

दैन्यात्तानास्तितद्गेहे सदा कालं च सिद्धिस्याद्
शत्रुनाशाय निश्चितम् ।
अलक्ष्मीनाशमायाति वस लक्ष्मीर्निरन्तरम् ।। 7

अधमौ धर्मं जानाति इष्टप्राप्त्यै न संशयः ।
महावश्यकरी युक्तो राजसम्मानमेव च
महाकण्टकनाशे च नित्योत्साहेति मङ्गलम् ।। 8

संग्रामे दारुणे वश्ये शस्त्रबाधा न जायते ।
राजद्वारे महाद्वारे विजयं प्राप्नुवन्ति च ।। 9

सान्तज्वरविनाशी च चातुर्थिकनिवारणम् ।
अपमृत्युहरे तस्माद्दीर्घमायुः सुखी भवेत् ।। 10

व्याघ्रचोरभयं चैव अग्निबाधा तथैव च ।
सर्पबाधां न जानाति सर्वबाधाविनाशनम् ।। 11

क्षयं च दुर्दरं रोगं सदा रोगेण पीडितम् ।
यन्त्रोदकं पिबेन्नित्यं अष्टमासे तु जायते ।। 12

गुदव्याधि विनाशी च मूत्रव्याधि विनाशनम् ।
यन्त्रोदकं पिबेन्नित्यं वर्षमेकं तु जायते ।। 13

द्विकाले पूजयेद्यन्त्रं शुचिर्भूत्वा च मानवः ।
कुर्याज्जपं शतदिनं लभेद्राज्यादिकं भवेत् ।। 14


CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

दशप्रदक्षिणं नित्यं मौनं कुर्यात्सुतं दृढम् ।
पुत्राभावे त्वया नारी लभेत् कृतसुतानि च ।। 15

अर्कश्चन्द्रश्च भौमश्च गुरुः काश्यश्शनैश्चरः ।
बुधो राहुश्च केतुश्च तस्य पीडा न जायते ।। 16

पश्यन्ती मददृष्टीनां निर्बाधा च भविष्यति ।
यन्त्रोदकं पिबेन्नित्यम् पुष्टिमान् नवमासिके ।। 17

कण्ठे बध्वा च बाहूनां बालग्रहनिवारणम् ।
पूजयेत्कृषिमध्याह्ने उत्कृष्टं च फलं लभेत् ।। 18

प्राणीयान्मरणादन्ये स्वर्गलोके महीयते ।
स्वस्य पापविनिर्मुक्तो पदं सायुज्यमाप्नुयात् ।। 19

इति डामकेश्वतन्त्रे उमामहेश्वकसंवादे कार्तवीर्ययन्त्रम् ।
प्रसन्ना तात्कालिको भवति षट्कोणोपरि तण्डुलं निधाय ।।20

आवाहनपूर्वकं दीपं प्रज्वाल्य पश्चात् जपं कुर्यात् ।
दीपमध्ये सार्थपलानि घृतं निधाय तन्मध्ये
एकादश तन्तुवर्तिकां कृत्वा निधाय दीपं प्रज्वाल्य ।
मध्यमपक्षे सार्धद्वितीयटङ्कघृतं निधाय तन्मध्ये च ।
चतुः सूत्रवर्तिकां कृत्वा निधाय दीपं प्रज्वाल्य
उत्तम पक्षे अष्टोत्तरसहस्रजपः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कनिष्टपक्षे अष्टोत्तरशतं जपः

ओं फ्रों च्रीं क्लीं भ्रूं आं ह्रीं क्रों श्रीं हुं फट् स्वाहा ।

श्री कार्त्तवीर्यार्जुनाय नमः ।

अस्य श्री कार्तवीर्य महामन्त्रस्य

दत्तात्रेयो भगवान् ऋषिः ।

कार्त्तवीर्यार्जुनो विद्युच्चक्रवर्ती देवता ।

कां बीजम् । कीं शक्तिः कृं कीलकम् ।

मम सकल कामना सिध्यर्थे जपे विनियोगः

## कार्तवीर्यमन्त्रः*

कार्तवीर्यार्जुनो विद्युच्चक्रवर्ती देवता ।

फ्रों बीजम् ।

च्रीं शक्तिः क्रों कीलकम् ।

मम चतुर्विधफलपुरुषार्थंसिद्धयै जपे विनियोगः ।

दत्तात्रेयप्रियाय अङ्गुष्टाभ्यां नमः ।

माहिमतीनाथाय तर्जनीभ्यां नमः ।

रेवाजलक्रीडातृप्ताय मध्यमाश्यां नमः ।

हैहयाधिपतये अनामिकाभ्यां नमः ।

सहस्रबाहवे कनिष्टिकाभ्यां नमः ।

कार्त्तवीर्यार्जुनाय करतलकरपृष्टाभ्यां नमः ।

---

* पाठभेदः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

एवं हृदयादिन्या सः ।

दत्तात्रेयप्रियाय हृदयाय नमः ।

माहिषमतीनाथाय शिरसेस्वाहा ।

रेवाजलक्रीडात्तप्राप्ताय शिखायै वषट् ।

हैहयाधिपतये कवचाय हुम् ।

सहस्रबाहवे नेत्रत्रयाय वौषट् ।

कार्तवीर्यार्जुनाय अस्त्राय फट् ।

भूर्भुवस्सुवरोमिति दिग्बन्धः ।

**अथ ध्यानम् ।**

अव्यात्सर्वभयात्प्रभाकरनिभः खद्योतनोद्योतितः ।
स्वर्णस्रक् परिवीतकन्धरधरो रक्तांशुकोष्णीषवान् ।
नानाकल्पविभूषितकरसहस्रात्थाबाणासनः ।
बाणासक्तसहस्रबाहुरनिशं भूवल्लभो नः प्रभुः ।। 1

सहस्रबाहुं सशरं सचापं रक्ताम्बरं रत्नकिरीटकुण्डलम् ।
चोरारिदुष्टभयनाशनमिष्टदं तं ध्यायेन्महाविजृंभितकार्त्तवीर्यम् ।। 2

दोर्दण्डेषुसहस्रसम्मितकरेष्वेतेष्वजस्रं लसत्
कोदण्डेषुशरैरुदग्रविशिखैरुद्यत्विकस्वत्प्रभुः ।
ब्रह्माण्डं परिपूरयंस्तदखिलं गण्डस्थलालोडितम्
द्योतत्कुण्डलमंण्डितो विजयते श्रीकातवीर्यप्रभुः ।। 3

सप्तद्वीपैकनाथः सवितृसमरुचिः सर्वदुष्टान्तको नः
पायादज्ञायताक्षो रथवरनिलयः स्थूलकायो निशीथः

CC-0. SaTasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चापान्तेषुत्रिलोकधृतधनुषानिरस्वनैः सेव्यमान
श्रीमान् श्रीकार्तवीर्योऽखिलनृपतिनताङ्गभुजक्षिप्रकारी ॥ 4
(पञ्चबीजैः पञ्चपूजां कृत्वा मूलं जपेत् ।)
ओं फ्रों च्रीं क्लीं भ्रं आं ह्रीं क्रों श्रीं हुं फट् स्वाहा ।
कार्तवीर्यार्जुनाय नमः ।
(जपं कृत्वा पुनर्न्यासं कुर्यात् ) ॥

CC-0. Saraswati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## यन्त्रविमर्शः

दिक्पत्रं विलिखेत् स्वबीजमदनः
श्रुत्यादि–वाक–कर्णिकम्
वर्णान्तप्रणवादि–बीज–दशकं शेषार्णपत्रान्तरम् ।
उष्माद्य–स्वर–केसरैः परिवृतं शेषैः स्व–कोणोल्लसद्–
तीर्णः क्षिति–मन्दिरावृतमिदं यन्त्रं धराधीशतुः ।।

(उष्माणः शषसंहतैः स्वरान् प्रतिकेश्शनन् द्वा (द्वावतिक्रमेणकेशरेषु लिखेत)

**Start from top-middle-clockwise**

कं खं गं घं ङं – चं छं जं झं ञं
टं ठं डं ढं णं – तं थं दं धं नं
पं फं बं भं मं – यं रं लं वं –
शं षं सं हं

**Second circle from outside - start from top middle clockwise**

अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं
एं ऐं ओं औं अं अः

**Third circle, alternate letters - one inside the lotus-petal and the other outside the petal.**

**Inside the lotus-petal.**

ओं फ्रों च्रीं क्लीं छ्रूं आं ह्रीं क्रों श्रीं हुं

**Out side the lotus-petal.**

कां तैं वीं यीं जुं नां यं नं मं फट्

**Together**

ओं कां फ्रों तैं च्रीं वीं क्लीं यीं छ्रूं जुं आं
नां ह्रीं यं क्रों नं श्रीं मं हुं फट् (स्वाहा)

CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**Inside the inner circle**

फ्रों क्लीं

ओं एं

हृदयाद्यङ्गैः प्रथमावरणम् ।

फ्रों हृदंयदेवतां पूजयामि ।

नम इति द्वितीयावरणम् ।

पूर्वादि चतुर्दिक्षु ।

ओं चोरमदविभञ्जनाय नमः ।

मारीमदविभञ्जनाय नमः ।

अरिमदविभञ्जनाय नमः ।

दैत्यमदविभञ्जनाय नमः ।

1) विदिक्षु ।। (आग्नेयमारभ्य)

दुष्टनाशनाय नमः ।

दुःखनाशनाय नमः ।

दुरितनाशनाय नमः ।

आमयनाशनाय नमः ।

अथ तृतीयावरणे –

क्षेमङ्कर्यै नमः ।

वश्यकर्यै नमः ।

श्रीकर्यै नमः ।

यशस्कर्यै नमः ।

आयुष्कर्यै नमः ।

धनकर्यै नमः ।

प्रज्ञाकर्यै नमः ।

विद्याकर्यै नमः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**अथ चतुर्थावरणे –**

इन्द्राय नमः ।

अग्नये नमः ।

यमाय नमः ।

निर्ऋतये नमः ।

वरुणाय नमः ।

वायवे नमः ।

कुबेराय नमः ।

ईशानाय नमः ।

(ऊर्ध्वं) ब्रह्मणे नम ।

(अधः) अनन्ताय नमः ।

**अथ पञ्चमावरणम् –**

वज्रायुधाय नमः ।

शक्त्यायुधाय नमः ।

दण्डायुधाय नमः ।

खड्गायुधाय नमः ।

पाशायुधाय नमः ।

ध्वजायुधाय नमः ।

गदायुधाय नमः ।

त्रिशूलायुधाय नमः ।

अम्बुजायुधायनमः ।

चक्रायुधाय नमः ।

CC-0.TSarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ।। कार्तवीर्यार्जुनचक्रम् ।।

Sloka around the चक्रम्

Top line कृतवीर्यसुतो राजा

Right side सहस्रभुजमण्डलः

Bottom line अवतीर्णो हरिः साक्षात्

Left side पालयेत् सकलं मम

मालामन्त्रार्णविहितं वरदष्टलसत्तस्य गायत्रीवर्णान् ।
तिस्रोऽभूतार्णवृत्तं सफलसुखकरं यन्त्रमानुष्टुभाख्यम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

अग्निकार्तवीर्यमन्त्रः

अग्निचक्रम्

"ओं उत्तिष्ठ पुरुष हरिपिङ्गललोहिताक्ष देहि मे दापय स्वाहा"




पूजा - रक्तगन्धाक्षता - रक्तपुष्प - रक्तवस्त्र - हविष्यान्न - नैवेद्य करु । न जप करु ।
न शत्रुगृहीस्थापीलियांशत्रु सशरीशोषाधि हो ।
उनयको न जाहालि ।

CC-0 Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## धारणार्थकम् यन्त्रः

### (Yantra for wearing purpose)

### (அணிவதற்கான யந்த்ரம்)

அமைப்பு

On all four gives - कृतवीर्यसुतो राजा

Left top - य    Right top - व

Left Bottom - ह    Right Bottom - र

**अष्टदलपद्मम् –**

कार्तवीर्य– महावीर्य! सर्वशत्रुविनाशन
सर्वत्र सर्वदा तिष्ठ दुष्टान्नाशय पाहि माम् ।
श्री कार्तवीर्यार्जुनाय राजन्यचूडामणये
मोहशक्तिमते सहस्रबाहवे हुं फट् स्वाहा ।।

अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं

एं ऐं ओं औं अं अः

ओं तुलजाराजवर्माणं* पालय पालय ।।

---

* "तुलजाराजवर्माणं" इत्यत्र आत्मनः नाम विलिख्य धारयेत् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

धारणार्थकं यन्त्रः




यन्त्रोऽयं तुलजाराजवर्मणे निर्मितमस्ति।
उपासकः आत्मनः नाम यन्त्रमध्ये विलिख्य
सुवर्णेन निर्माय धारयेत्।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

॥ श्रीकार्तवीर्यरक्षाबन्धनम् ॥



सुवर्णपत्रे विलिख्य कण्ठे धारयेत् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

# Select Bibliography


1. Prapanchasarasarasangraha,
   Critically edited by S. Krishnamurthi Sastri,
   T.M.S.S.M. Library, Year: 1976.

2. Devi Bhagavatam - (Tamil version)
   Ed. Aru. Ramanathan, Prema Publications, Chennai,1999.

3. Purannic Encyklopaedia, Vettam Mani,
   Motilal Banarsidass, Delhi, 1997.

4. Kartaviryarjuna Prabandha of Asvati Tirunal Rama Varma,
   University Manuscripts Library,Trivandram, 1945.

5. *மச்சபுராணம்* (details not available).

6. *வாழ்வியற்களஞ்சியம், தொகுதி-7,*
   *தமிழ்ப்பல்கலைக்கழகம், தஞ்சை, 1988.*


CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

